## आत्मा प्रकरणात् ॥ ३ ॥

अत्र 'ब्रह्म'पदेनात्मा व्यापको मायातद्गुणसम्बन्धरहितो यः स एवोच्यते, कुतः? प्रकरणात्, (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मित्युपक्रम्य तत्पाठाद् गुणातीतस्यैवैतत् प्रकरणमिति तदेवात्र 'ब्रह्म'शब्देनोच्यत इत्यर्थः ॥ ३ ॥

ननु (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मिति भिन्नं वाक्यमृग् भिन्नातोनेकं प्रकरणमिति सगुणमेव तत्र 'ब्रह्म'पदेनोच्यत इत्याशङ्क्य प्रतिवदति,

## अविभागेन दृष्टत्वात् ॥ ४ ॥

पूर्ववाक्येन सममविभागेनैवेयमृक् पठिता न तु विभागेन, कुतः? दृष्टत्वात्, 'ब्रह्मविदि'ति-वाक्यानन्तरं 'तत्' पूर्वोक्तमर्थं प्रतिपाद्यत्वेनाभिमुखीकृत्यैपर्गुक्तेतिश्रुतिर्दृश्यते "तदेषाभ्युक्ते"ति, तेन पूर्ववाक्योक्तार्थमधिकृत्यैवर्गुच्यत इति गुणातीतमेव तदत्र वाच्यमित्यर्थः ॥ ४ ॥ १ ॥

॥ इति चतुर्थाध्याये चतुर्थपादे प्रथमं सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

पूर्वेण मुक्तो जीवो भगवदनुग्रहातिशयेच्छातो बहिराविर्भूतो गुणातीतेन पुरुषोत्तमेनैव सह सर्वान् कामानश्नुत इति सिद्धं, अथ तत्रैवेदं विचार्यते, आविर्भूतो जीवः प्राकृतेन शरीरेण भुङ्क्ते उताप्राकृतेनेति? तत्र भोगस्य लौकिकत्वे तदायतनस्यापि तादृशेनैव भवितव्यमिति मन्वानं प्रत्याह,

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ (४. ४. २.)

ब्राह्मेण ब्रह्मसम्बन्धिना ब्रह्मणा भगवतैव स्वभोगानुरूपतया सम्पादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तानश्नुत इति जैमिनिराचार्यो मनुते, तत्र हेतुरुपन्यासादिभ्य इति, (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मिति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय, तदर्थस्यैवोपन्यासोग्रिमयर्चा क्रियते (तै. ब्र.) "सोश्नुत" इत्यादिना, तथा च परप्राप्तेर्मुक्तिरूपत्वात् पुष्टिमार्गीयायास्तस्या एवंरूपत्वादक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात् तदात्मकमेव शरीरं तस्य वक्तुमुचितं न तु प्राकृतं, एतद्बोधनायैवाग्रेन्नमयादीनि विभूतिरूपाण्युक्तानि भक्तशरीरे प्रतीयमानानामर्थानां विभूतिरूपत्वेन ब्रह्मात्मकत्वं तेन साधितं भवति, इदमेवादिपदेन बहुवचनेन च ज्ञाप्यते, एतदानन्दमयाधिकरणे प्रपञ्चितमतो नात्र पुनरुच्यते, यत्र क्रमवादी जैमिनिरेवं मनुते तत्रान्येषामेवमङ्गीकारे किमाश्चर्यमितिज्ञापनाय तन्मतोपन्यासः कृतः ॥ ५ ॥

---

अविभागेन दृष्टत्वात् ॥४॥ सूत्रमवतारयन्ति नन्वित्यादि, ऋग् भिन्ना 'सत्य ज्ञान'मित्यृग् भिन्ना, तत्रर्चि, तद् ब्रह्म, अत्रर्चि ॥ ४ ॥ १ ॥ ॥ इति चतुर्थचतुर्थे प्रथमाधिकरणम् ॥ १ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥ अत्र प्रथमाधिकरणीयसूत्रचतुष्टयमध्ये पूर्वसूत्रद्वये भगवद्दत्तालौकिकविग्रहेण भगवता सह भोगः साधितोपरसूत्रद्वयेन च भगवतः पुरुषोत्तमत्वमुक्तं तत्र पूर्वसूत्रद्वयसिद्धभक्तविग्रह सूत्रकारो विचारयतीति तमर्थमनुवदन्तोधिकरणमवतारयन्ति पूर्वेणेत्यादिना, अनुग्रहातिशयेच्छातित्वरया फलदानानुकूलकृतिविषयिणीच्छा, सिद्धमित्यन्तो विषय उक्तः, संशयमाहुराविर्भूत इत्यादिना, पूर्वपक्षमाहुस्तत्रेत्यादिना, तदायतनस्य शरीरस्य, तादृशेनैव लौकिकेनैव, पूर्वोक्तान् सर्वान् कामान्, तत्र ब्राह्मशरीरेण भोगे, उपन्यासादिभ्यो विवरणादिभ्य इत्यर्थः, उपन्यासमेवोपपादयन्ति ब्रह्मविदित्यादिना, तस्या मुक्तेः, एवंरूपत्वात् सर्वकामाशनरूपत्वात्, तदात्मकमेवाक्षरब्रह्मात्मकमेव, तस्य भक्तस्य, न तु प्राकृतमिति 'शरीरा'न्वयि, ननु भक्तशरीराणामक्षरात्मकत्वे किं प्रमाणमित्यत आहुरेतद्बोधनायेत्यादि, शरीरस्याक्षरात्मकत्वबोधनायैवशीलमकोपन्यासानन्तरमन्नमयादीनि विभूतिरूपाणि पुरुषविधत्वेने ब्रह्मत्वेनोपास्यत्वेन चोक्तानि निरूपितानि तादृशे, तादृशनिरूपणस्य फलमाहुर्भक्तशरीर इत्यादिना, तादृशविभूतिरूपभक्तशरीरे इत्यर्थः, अर्थानाम्रूपरसगन्धस्पर्शादिसकलधर्माणामित्यर्थः, तेन पूर्वोक्तरीत्या विभूतिनिरूपणेन, इदमेव तादृशभक्तशरीरधर्माणां श्रुत्युक्तब्रह्मरूपत्वमेव, आदिपदेत्यादि, उपन्यासादिभ्य इत्यादिपदेबहुवचनेन तत्प्रकरणसकलब्रह्मरूपताप्रतिपादकश्रुतीनां ग्रहणमिति बोध्यं, प्रपञ्चितं वर्णकान्तरे प्रपञ्चितमित्यर्थः, अन्येषां ज्ञानिभक्तानां, एवमङ्गीकारे भक्तशरीराणामुक्तरीत्याक्षररूपताङ्गीकारे ॥ ५ ॥

## चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ६ ॥

(बृह. ६. १. १३.) "स यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघन" इतिश्रुतौ 'घन'पदेन ज्ञानात्मकविग्रहात्मत्वं ब्रह्मणो बोध्यतेन्यथा न वदेत् प्रयोजनाभावात्, तथा च तादृशेन सह भोगकर्त्रा तादृशेनैव भाव्यमिति चिति चिद्रूपे ब्रह्मणि तन्मात्रेण चिन्मात्रेण रूपेण कामान् भुङ्क्ते न तु विग्रहेण, श्रुतौ जीवस्य तथात्वस्यानुक्तेः, पूर्णानन्दत्वाद् भगवतस्तत्सम्बन्धेन तदानन्दाननुभवतीत्यर्थः सम्पद्यते, चिदात्मत्वं जीवस्य यतो नैसर्गिकमित्यौडुलोमिराचार्यो मनुते, (छान्दो. १०. १२. १.) "अशरीरं वावे"तिश्रुतिरेतादृशान्यविषयिणीति ज्ञेयं, मुक्तिदशायां तदनुभवस्य भगवदिच्छाविषयत्वाभावान्न तथा, तथा चैतदेवजातीयकानन्दानुभवोस्य भवत्विति भगवदिच्छैव श्रुतौ "काम"शब्देनोच्यते ॥ ६ ॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

परमाचार्यो बादरायणस्तु नैवं मनुते (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मित्यस्योपन्यास एवमपि विग्रहवत्त्वेनापि कृतो यतः, तथा हि (तै. ब्र.) "यो वेद निहितं गुहाया"-मित्यत्र 'गुहा'या उक्तत्वात् तस्या विग्रह एव सम्भवात्, किञ्च प्रथमान्तोपस्थितत्वेन 'प्राप्नोती'-त्युक्त्या च ब्रह्मविदः परप्राप्तौ स्वातन्त्र्यं ज्ञाप्यते, तदेव "ब्रह्मणा सहे"तिपदेनोपन्यस्तं, तेन ब्रह्मणोपि तत्समानक्रियावत्त्वं ज्ञाप्यते परन्त्वप्राधान्येन, तथा च भक्तस्यैव कामा यदुक्तमुचितास्ते च न विग्रहं विना सम्भवन्ति, किञ्च "विपश्चिते"तिविशेषणेन विविधं पश्यच्चिद्रूपत्वमुच्यते, कामभोगोक्तिप्रस्ताव एतदुक्त्या तदुपयोग्येव सर्वं वाच्यं, एवं सति भक्तविविधभावान् पश्यति

---

चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ६ ॥ सूत्रमवतारयन्ति स यथेत्यादिना, अन्यथा ज्ञानात्मकविग्रहानङ्गीकारे, न वदेच्छ्रुतौ 'घन'पदं न वदेदित्यर्थः, तादृशेन सच्चिदानन्दविग्रहेण भगवतेत्यर्थः, भोगकर्त्रा भक्तेन, तादृशेनैव सच्चिदानन्दवतैव, सूत्रार्थमाहुश्चितीत्यादि, चिन्मात्रेण रूपेण सच्चिदानन्दशरीरेणेत्यर्थः, न तु विग्रहेण सच्चिदानन्दात्मकातिरिक्तभौतिकविग्रहेणेत्यर्थः, तथात्वस्य सच्चिदानन्दविग्रहस्यस्य, तत्सम्बन्धेन सच्चिदानन्दविग्रहं प्राप्येत्यर्थः, तदानन्दान् भगवदानन्दान्, 'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत' इतिश्रुतिः, अशरीरं भौतिकशरीरशून्यं, एतच्छ्रुतौ प्रत्येकं प्रियाप्रिययोर्भोगनिषेधाद्प्रियमिश्रितप्रियभोक्तृविषयिणीति न विरोध इत्यर्थः, भगवच्छरीरस्य तादृशस्य मुक्तिसुखं कुतो न भवतीत्यत आहुर्मुक्तीत्यादि, तदनुभवस्य मुक्तिसुखानुभवस्य, भगवदिच्छेत्यादि, मुक्तिसुखवानयं भवत्विति भगवदिच्छाविषयत्वाभावादित्यर्थः, 'कामानि'तिबहुवचनं समर्थयितुमाहुस्तथा चेत्यादि, एतज्जातीयकेनि, भगवता 'सह' भुज्यमानत्वेन प्रतिपादितसजातीयेनेत्यर्थः, इत्येवंविधाकारेत्यर्थः ॥ ६ ॥

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ सिद्धान्तमाहुः परमेत्यादिना, नैवं मनुते चिदतिरिक्तविग्रहाभावं न मनुत इत्यर्थः, सूत्रेण सिद्धान्तं वक्तुमाहुर्ब्रह्मविदित्यादि, उपन्यास अनूप उपन्यासः, एवमपीतिसूत्रभागस्यार्थो विग्रहवत्त्वेनेत्यादि, तादृशार्थकरणमेव प्रदर्शयन्ति तथा हीत्यादिना, तस्या गुहायाः, प्राधान्येन श्रुतौ भक्तकामप्रतिपादनमुखेन भक्तानां विग्रहवत्त्वं साधयन्ति किञ्चेत्यादिना, प्रथमान्तेत्यादि, 'आप्नोती'त्यस्य कर्तुः प्रथमान्तपदोपस्थाप्यत्वेनेत्यर्थः, स्वातन्त्र्यमित्यर्थः, उपन्यस्तं तृतीयान्तार्थस्य गौणत्वं प्रथमान्तार्थस्य प्राधान्यमिति 'सह'शब्देन बोधितमित्यर्थः, तत्समानेत्यादि, भक्तक्रियासमानक्रियानुकूलयत्नवत्त्वमित्यर्थः, कामाः 'सोश्नुते सर्वान् कामा'नित्यत्र भुज्यमानपदार्थगोचरा कामा भक्तनिष्ठा एवेत्यर्थः, विविधं नानाप्रकारकं नानाविशेष्यकं चेत्यर्थः, उच्यते भगवत उच्यते, एतदुक्त्या विविधपश्यच्चिद्रूपत्वोक्त्या, तदुपयोग्येव, इत्युक्तं भवतीति,

---

१. ॰नन्दमनु॰ वगाघो। २. एव तदुक्त्येति क, तदुक्त्या श्रीहस्ताक्षरेषु।

स्वयं भोगचतुरश्चेत्युक्तं भवति, एतेनापि भक्तविग्रहः सिध्यति, ननु विग्रहस्यागन्तुकत्वे लौकिकत्वादलौकिकेन ब्रह्मणा भोगो विरुद्ध इत्यत आह पूर्वभावादिति, भक्तप्राप्तेः पूर्वमे भगवदिप्सितभोगानुरूपविग्रहाणां सत्त्वान्न विरोधः, किञ्चोक्तश्रुतिद्वयेः पुरुषोत्तमेन स भक्तस्य कामभोगो निरूपितः, स यावतार्थेन विना नोपपद्यते तावान् स श्रुत्यभिमत इ मन्तव्यं, तथा च ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येव, यथानुग्रहो यस्मिन् जीवे ताद‍ृशं तदाविश्य भगवदानन्दमश्नुत इति सर्वमवदातम् ॥ ७ ॥

एवं परप्राप्तिः केषाञ्चिदेव भवति, तत्र हेत्वपेक्षायामाह ।

## सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥

भजनानन्दं दातुं यमेव सङ्कल्पविषयं करोति स एवैवं प्राप्नोतीति भगवत्सङ्कल्प ए तत्र हेतुः, तत्र प्रमाणमाह तच्छ्रुतेः, (कठ. २. २२.) "नायमात्मे"त्युपक्रम्य "यमेवैष वृणु तेन लभ्य" इतिश्रुतिः श्रूयते, अतः स एवात्र हेतुः, श्रुतौ प्रवचनादिनिषेधः कृत इत्यत्राप्येव कार उक्तः, चकारात् तज्जनितैवैतदनुरूपा परमार्तिः सङ्गृह्यते ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

यतो हेतोः साधनं फलं चोक्तरीत्या स्वयमेव नान्योतो हेतोस्तेषां हृदि साधनत्वेन फलत्वेन प्रभुरेव स्फुरति नान्यस्तेनानन्यास्ते तेषामेवाधिपतिः पुरुषोत्तमः, अन्यत्राधिपत्यं विभूतिरूपैः करोत्यतः (बृह. ६. ४. २२.) 'सर्वस्याधिपति'रितिश्रुतिरपि तदभिप्रायेणैवेतिभावः चकारात् (श्रीमद्भाग. ९. ६. ८.) "मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपी"तिभगवद्वाक्यं सङ्गृह्यते, अन्यथा सर्वज्ञस्याकुण्ठितज्ञानशक्तेरेवङ्कथनमयुक्तं स्यात्, अतः पुष्टिमार्गोनुग्रहैक साध्यः प्रमाणमार्गाद् विलक्षणस्तत्र विश्वासश्च तथेति सिद्धम् ॥ ९ ॥

मुक्तोपि जीवः पुष्टिमार्गेङ्गीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोतीति सिद्धं, अत्र प्रत्यवतिष्ठते[1] ।

## अभावं बादरिराह ह्येवम् ॥ १० ॥

बादरिराचार्यो मुक्तस्य देहाद्यभावं मनुते, तत्र हेतुराह ह्येवमिति, ब्रह्मविदो हि मुक्तिरुच्यते

---

'विपश्चित्'पदेनोक्तं भवतीत्यर्थः, एतेन भक्तविविधभावदर्शनोपपादनेन भक्तप्राप्तेः भगवता सह भक्तप्राप्तेः, भगवदिप्सितो भगवता भक्ताय दातुमिच्छित इत्यर्थः, पूर्वोक्तविचारेण फलितो योर्थस्तमाहुः किञ्चेत्यादिना, सोर्थः, तदाविश्य शरीरमाविश्येत्यर्थः ॥ ७ ॥

सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥ सूत्रमवतारयन्त्येवमित्यादि, एवं पूर्वोक्तरीत्या, केषाञ्चिदेवेत्येवकारेण सर्वेषां प्राप्तिव्यवच्छेद[2], यमेव यं जीवमेव, प्रवचनादीत्यादि, 'नायमात्मा प्रवचनेन लभ्यो न मेधये'त्यादीनां निषेधः कृत इत्यर्थः, अत्रापि सूत्रेपि, चकारात् सौत्रचकारात्, तज्जनिता सङ्कल्पजनिता, तदनुरूपा सङ्कल्पविषयीभूतफलानुरूपा ॥ ८ ॥

अत एव चानन्याधिपतिः ॥ ९ ॥ सूत्रविवरणमाहुर्यत इत्यादिना, अन्यत्र पुष्टिभक्तभिन्नेषु, श्रुतिरपि 'सर्वस्य वशी सर्वस्येशान' इत्यादिना, तदभिप्रायेणान्यत्र विभूतिरूपेणाधिपत्याभिप्रायेण, चकारात् सौत्रचकारात्, तथा प्रमाणमार्गाद् विलक्षणः ॥ ९ ॥

अभावं बादरिराह ह्येवम् ॥१०॥ पूर्वसूत्रसिद्धार्थमनुवदन्तः सूत्रमवतारयन्ति मुक्तोपीत्यादि, अत्र विग्रह-

---

१. °तस्य य । २. °ति के ।

(बृह. ४.४.१४.) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती"त्याद्युक्त्वा (बृह. ४.४.१४.) "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये"दित्यादिना द्वितीयज्ञाननिषेधमाह ब्रह्मविदः श्रुतिः, तथा च तस्य कामभोगवार्ता दूरतरेति तदाक्षेप्यदेहोपि तथा ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिराचार्यस्तु मुक्तस्य पुंसो देहादेर्भावं सत्तां मन्यते, तत्र हेतुर्विकल्पेत्यादि, (तै. ब्र.) "ब्रह्मविदाप्नोति परमि"तिश्रुत्या ब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते (कठ.२.२२.) "नायमात्मे"तिश्रुत्या तु वरणमात्रप्राप्यत्वं "सोश्नुत" इत्यादिना च परप्राप्त्युपन्यासः क्रियते, (बृह. ४.४.२२.) "इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती"ति च पठ्यते, एवं सति मिथोविरोधे तदभावायोक्तव्याख्यानरीत्या ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरब्रह्मप्राप्तिः पुष्टिमार्गीयभक्तस्य तु 'सोश्नुत' इत्यनेनोक्ता परप्राप्तिरितिव्यवस्थितविकल्प एव श्रुत्यभिमत इति ज्ञायते, तेन "नायमात्मे"तिश्रुतिः परप्राप्तिविषयिणी "इहैवे"त्यादिश्रुतिस्तु मर्यादामार्गीयविषयिणीति मन्तव्यं, एवं सति पुष्टिमार्गीयस्य भोगसाधनात्मकचिद्ग्रहवत्त्वं निःप्रत्यूहं सिध्यति, (बृह. ४. ४. १४.) "तत् केन कं पश्येदि"त्यादिना तु ब्रह्मज्ञानसामयिकीं व्यवस्थामाह न तु तदुत्तरकालीनपरप्राप्तिसामयिकीमिति किमनुपपन्नम्? ॥ ११ ॥

## द्वादशाहवदुभयविधं बादरायणोतः ॥ १२ ॥

ब्रह्मणा सह सर्वकामाशनप्रयोजकं शरीरं, शरीरत्वस्य भूतजन्यत्वव्याप्यत्वात् तदभावेनाशरीररूपं तद्भोगायतनत्वेन शरीररूपमपीति बादरायण आचार्यो मन्यते, अत्र हेतुरत इति, तथाविधश्रुतेरित्यर्थः, तथा हि (छान्दो. ९.२३.१.) "भूमैव विजिज्ञासितव्य" इत्युक्त्वा तत्स्वरूपमाह "यो वै भूमा तत् सुख"मित्युपक्रम्याग्र उच्यते (छान्दो.९.२४.१.) "यत्र नान्यत् पश्यति नान्यच् छृणोति नान्यद् विजानाति स भूमे"त्यनेन केवलभावविषयत्वं पुरुषोत्तमलक्षणमुक्त्वा केवलभाववतो भक्तस्य विप्रयोगसामयिकीं व्यवस्थामाह (छान्दो. ९.२५.२.)"स एवाधस्तात् स उपरिष्टात् [redacted] पश्चात् स पुरस्तादि"त्यादिना, ततः "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नि"तिपूर्वावस्थामनूद्य संयोगावस्थामाह (छान्दो. ९. २५. २.) "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द" इतिवाक्येन 'सोश्नुत' इतिश्रुतिसंवादिनमर्थमुक्त्वा भक्तस्वरूपमाह (छान्दो.९.२६.१.)"तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण इत्युप-

---

माश्यंशे, प्रत्ययतिप्रते विरुद्धं भवतीत्यर्थः, तदेव सूत्रमुखेन प्रतिपादयति बादरिरित्यादिना ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ तत्प्राप्तिः परप्राप्तिः, मिथोविरोधे 'सोश्नुते सर्वान् कामान्' 'ब्रह्मैव समवनीयन्त' इत्यनयोर्मिथोविरोध इत्यर्थः, तदभावाय विरोधाभावाय, उक्तव्याख्यानरीत्या ब्रह्मविद् ब्रह्म प्राप्नोति ब्रह्मवित् परं प्राप्नोतीत्युक्तव्याख्यानरीत्येत्यर्थः, स्फुटमन्यत् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोतः ॥१२॥ सूत्रं व्याकुर्वन्तो भक्तशरीरस्योभयविधत्वं प्रतिपादयन्ति ब्रह्मणा सहेत्यादिना, इत्थं च भक्तभिन्नमुक्तानां शरीरमेव नास्तीति भक्तानां च तादृशाधिकारिणां शरीरमिति शरीरत्वतदभावोभयत्वमप्यस्तीति व्युत्पादयन्तीतिभावः, तदभावेन भूतजन्यत्वरूपव्यापकत्वस्याभावेन, अशरीररूपं व्याप्याभावशरीरत्वाभाववदित्यर्थः, भोगायतनत्वेन परमानन्दसाक्षात्कारावच्छेदकत्वेन, अत्र हेतुस्तादृशभक्तशरीरस्य शरीरत्वतदभावोभयविरुद्धधर्मवत्त्वे हेतुः, तत्स्वरूपं भूमस्वरूपं, यत्र साक्षात्कारविषयत्वेन भक्तेषु प्रसिद्धं, केवलभावविषयत्वंमनन्यभक्तप्रतीतिविषयत्वं, इदं सर्वं भक्तशरीरतद्धर्मादि, तेन भक्तशरीरस्याप्यमाननिमित्तकारणत्वेन

---

१. °ली° क। २. सर्वभूत° क। ३. सुख त्वेव पा। ४. °भि° कचपापुगो। ५. °नः क।

क्रम्यात्मत एवेदꣳ सर्वमि"ति, तेनाशरीरत्वं सिध्यति, अव्ययप्रयोगेणाविकृतादेव पुरुषोत्तमात् प्राणाद्याविर्भाव उच्यते, अत्र ल्यब्लोपे पञ्चमी, पूर्वं विरहदशायां प्राणादयो भगवत्येव लीना आसंस्तैस्तत्प्राकट्ये तत एव प्राणादयोपि सम्पन्ना इति तत्प्राप्तेर्निमित्तत्वं, यतो विभूतिरूपाणामपि पुरुषोत्तमे लयो नानुपपन्नः, "आत्मरति"रित्यादिना "सोश्नुत" इत्यनेन च शरीरत्वं, जैमिनिरप्यत एव (ब्र. सू. ४.४.५.) "ब्राह्मेणे"ति मनुते, एकस्य विरुद्धोभयधर्मवत्त्वमनन्वानं प्रति वैदिकं दृष्टान्तमाह द्वादशाहवदिति, (तै. सं. ७. २. ९.) "यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेते"तिचोदनया (तै. सं.७.१.४.) "द्विरात्रेण यजेते"त्यादिवन्नियतकर्तृकत्वेनाहीनत्वं गम्यते द्वादशाहस्य,(तै.सं.७.५.१.) "द्वादशाहमृद्धिकामा उपेयुर्य एवं विद्वाꣳसः सत्रमुपयन्ती"तिश्रुत्या च सत्रत्वं बहुकर्तृकस्य गम्यते, एवमेव द्वादशाङ्गशरीरेन्द्रियप्राणान्तःकरणात्मभि'रश्नुत' इति सत्रतुल्यत्वं, वस्तुतो भगवद्विभूतिरूपत्वेन ब्रह्मात्मत्वेनैकरूपत्वमतो द्वादशाहवदुभयविधं, सत्रे प्रत्येकं चेतनानां यजमानानां फलभागित्ववदत्रापि तादृग्भक्तदेहादीनामपि ब्रह्मात्मकत्वाच्चेतनत्वमेवेत्यप्यनेन दृष्टान्तेन ज्ञाप्यते, अत एव श्रीभागवते (७.१.२४.) "देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामि"ति गीयते ॥ १२ ॥ २ ॥

॥ इति चतुर्थाध्याये चतुर्थपादे द्वितीयं ब्राह्मेणेत्यधिकरणम् ॥ २ ॥

अथेदं चिन्त्यते भगवत्स्वरूपे प्राकृतशरीर इवावस्था दृश्यन्ते तत्कालीनैः पुंभिरिति कथमप्राकृतत्वमुपपद्यत इति तत्रोपपत्तिमाह ।

## तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ (४. ४. ३.)

तद्दर्शनस्य वास्तववस्तुविषयकत्वव्यवच्छेदेन पूर्वपक्षव्युदासाय तुशब्दः, तत् प्राकृततुल्यतादर्शनमभावे तथात्वस्याभाव एव भवति, न तु तत्र प्राकृता धर्माः सन्ति, नन्वविद्यमानानामर्थानां कथं दर्शनमुपपद्यत इत्यत आह सन्ध्यवदिति, स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां दर्शनं भवति तथा भगवदिच्छावशात् तत्रापि प्राकृततुल्यत्वदर्शनस्योपपत्तेर्न प्राकृतत्वं तत्र ज्ञेयमित्यर्थः, तथा च श्रुतिः (बृह. ६. ३. ९.) "सन्ध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानञ्च," "अथ यथाक्रमोयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति स यत्रायं प्रस्वपिती"त्युपक्रम्य

भूतान्यत्वेनेत्यर्थः, आत्मत आत्मस्वरूपात्, अव्ययप्रयोगेणा'त्मत'इतिप्रयोगेण, पञ्चम्यर्थकथनेन श्रुत्यर्थमाहुः पूर्वमित्यादिना, ततो विरहदशोत्तरकाले, तत्प्राकट्ये भगवति दर्शनविषयीभूते, तत एव भगवत एव, तत्प्राप्तेर्भगवत्प्राप्तेः, निमित्तत्वं भक्तानां प्राणादिसकलदेहधर्मप्राप्तौ निमित्तत्वं, शरीरत्वं भक्तदेहस्य शरीरत्वं, ब्राह्मेण विभूतिरूपशरीरेण, अहीनत्वं द्वादशाहस्याहीनत्वं सत्रत्वमित्येकस्योभयरूपत्वं श्रुतिसिद्धमित्यर्थः, एवं भक्तस्य सत्रतुल्यतामुपपादयन्त्येवमेवेत्यादिना, शरीरस्य द्वादशाङ्गता निबन्धे स्फुटा तेन भोगाशनं, एकमन्तःकरणसहितान्येकादशेन्द्रियाण्यात्मा चैतैरपि द्वादशभिर्भोगाशनं, एवं सङ्ख्यया सत्रतुल्यत्वं पूर्वोक्तरीत्या शरीरद्वैविध्येनापि शरीरस्य भक्तीयस्य तुल्यत्वं बोध्यं, भक्तशरीरसत्रयोर्भगवद्विभूतित्वभगवद्रूपत्वाभ्यां द्वैविध्येन साम्यमुपपादयन्ति वस्तुत इत्यादिना, तादृगुक्तसर्वकामभोक्तृ, देहेन्द्रियेत्यादि, भौतिकदेहेन्द्रियादिहीनानामित्यर्थः ॥ १२ ॥ २ ॥

॥ इति चतुर्थचतुर्थे द्वितीयाधिकरणम् ॥ २ ॥

तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ भक्तदेहस्वरूपं विचारयितुमधिकरणमवतारयन्त्यथेत्यादिना, भगवत्स्वरूप इत्यादिना संशयादिकमाहुः, तथा चात्र फलरूपं भगवत्स्वरूपं प्रकृतिसम्बन्धवन्न वेतिसंशयः प्रकृतावस्थादर्शनात् प्राकृतमितिपूर्वपक्षः प्राकृतत्वेन दर्शनस्य स्वप्नतुल्यत्वादप्राकृतमितिसिद्धान्तः, तत्र पूर्वपक्षनिवृत्तिनिमित्तं, उपपत्तिं तुशब्देनोपपत्तिं, आह सूत्रकार इत्यर्थः, तद्दर्शनस्येति भगवति प्राकृतावस्थादर्शनस्य

१. °न. क । २. पूर्वविरह° कगो । ३. श्रीहस्ताक्षरेषु नास्ति तत.पदम् । ४. °कर्तृत्वेन क । ५ लुप्तं कपा । ६. °मर्थानां कपु, °मानार्थाना क । ७. °तीती° क ।

(बृह. ६.३.१०.) "स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति न तत्र रथा न रथयोगा न पन्थानो भवन्ती"त्यादिरूपा, एवमेव भगवानासुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतत्वबुद्धिसम्पादनाय तादृशीमिव लीलां दर्शयत्यतो न प्राकृतत्वशङ्कागन्धोऽप्यत्र, अत एव भगवतोक्तं (भ. गी. १६. १८.) "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयका" इत्युपक्रम्य (१६.२०.) "ततो यान्त्यधमां गति"मिति, तेषामासुरत्वेन मुक्त्यनधिकारित्वात् तथाकरणं, अतः सुष्ठूक्तं सन्ध्यवदुपपत्तेरिति ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

लौकिकवद् भासमाने लीलापदार्थे यद् दर्शनं भक्तानां तत् तु भावे विषये विद्यमाने सति भवति, अत्र दृष्टान्तमाह जाग्रद्वत्, यथा मोहाभाववतः पुंसः एवार्थस्य दर्शनं तथेति।

एताभ्यां सूत्राभ्यामेतदुक्तं भवति, (तै.ब्र.) "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"तिश्रुत्या भक्तकामपूरणाय भगवाँल्लीलां करोतीति गम्यते यद्दर्शनश्रवणस्मरणैर्भक्तानां दुःखं भवति तादृशीमपि तां करोतीति श्रूयते, यथा सौभयुद्धे मोहवचनानि हस्तादायुधच्युतिः प्रभासीयलीला च, उक्तरीत्या 'सोऽश्नुत' इतिश्रुत्या परब्रह्मत्वमवगम्यत उक्तलीलया तद्वैपरीत्यं च, एवं सत्येकस्या वास्तवत्वमन्यस्या अवास्तवत्वं वाच्यं, (तै.सं.१.३.६.) "ते ते धामान्युश्मसि" "विष्णोः कर्माणि पश्यत" "तद् विष्णोः परमं पदं" "तद् विप्रासो विपन्यव" इत्यादिश्रुतिभिः (म. ना. १३.१.) "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवं विश्वं नारायणं देवमक्षरं परमं पदं विश्वतः परमं नित्यं विश्वं नारायण१ हरिं विश्वमेवेदं पुरुषस्तद् विश्वमुपजीवति पतिं विश्वस्यात्मेश्वर१ शाश्वतं शिवमच्युत"मित्यादिभिश्च शुद्धब्रह्मणस्तद्विपरीतदर्शनेऽवश्यं हेतुर्वाच्यः, स त्वासुरव्यामोहनमेवेति पूर्वसूत्रेणोपपादितः, भक्तेभ्यः स्वरूपानन्ददानाय (ब्र. सू.२.१.३३.) "लोकवत् तु लीला कैवल्य"मितिन्यायेन या लीलाः करोति यथा रिङ्गणादिलीला भगवतो नैसर्गिकधर्मरूपानन्दात्मकत्वेन विद्यमाना एव सा भक्ताः पश्यन्तीति द्वितीयसूत्रेणोक्तं, अत एव लीलाया अनेकरूपत्वाद् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच् छुद्धब्रह्मधर्मत्वं न सम्भवतीतिशङ्कानिरासाय'कैवल्य'मित्युक्तं, (श्वेता. ६.११.) "साक्षी चेता केवलो निर्गुण"श्चेत्यादिश्रुतिषु यान्यधर्मराहित्यलक्षणा 'केवल'तोक्ता सा लीलात्मिकैव, लीलाविशिष्टमेव शुद्धं परं ब्रह्म न कदाचित् तद्रहितमित्यर्थः पर्यवस्यति, तेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यति तेन च नित्यत्वं, एतद् विद्वन्मण्डने प्रपञ्चितं, अथवा 'लीलै'व 'कैवल्यं' जीवानां मुक्तिरूपं, तत्र प्रवेशः परमा मुक्तिरितियावदित्यर्थः ॥१४॥२॥

॥ इति चतुर्थोध्याये चतुर्थपादे तृतीयं तत्त्वभावाधिकरणम् ॥ ३ ॥

---

वास्तववस्तुविषयकत्वाभावेनाभाव एवेति सादृश्यस्य भेदघटितत्वादित्यर्थः, तत्र भगवति, तथापि भगवत्यपि, उपपत्तेर्भ्रान्तत्वेन दर्शनस्योपपत्तेरित्यर्थः, अन्यत् स्फुटम् ॥ १३ ॥

भावे जाग्रद्वत् ॥१४॥ सूत्रमवतारयन्ति लौकिकेत्यादि, पूर्वं दोषकार्यमुक्तमिदं गुणकार्यमुच्यत इति बोद्धव्यं, अत्र पूर्वसूत्रा'दुपपत्ते'रित्यनुवर्तनीयं, तथा च 'लोकवत् तु लीलाकैवल्य'मित्यादिरीत्या पौगण्डबालकिशोराद्यवस्थापन्नस्य दर्शनं वास्तववस्तुदर्शनमेवेति बोध्यं, एताभ्यामित्युपदसूत्राभ्यां, तां लीलां, उक्तलीलया 'सोऽश्नुते' इतिलीलया, तद्वैपरीत्यं मोहकलीलाजन्यदुःखवैपरीत्यसुखरूपमित्यर्थः, तद्विपरीतदर्शने ब्रह्मधर्मातिरिक्तधर्मप्रकारेण ब्रह्मविशेष्यकदर्शने, स तु शुद्धस्य ब्रह्मण आविद्यकधर्मेण दर्शने हेतुः, एकरसत्वेत्यादि, नानाविधलीलासु भगवत एकरसरूपत्वमित्यर्थः, तेन स्वरूपात्मकत्वेन, प्रकारान्तरेण 'कैवल्य'पदार्थमाहुरथ वेत्यादि, तत्र प्रवेशो लीलायां प्रवेशः॥ १४॥२॥

॥ इति चतुर्थचतुर्थे तृतीयाधिकरणम् ॥ ३ ॥

---

१. °श्वमर्थं क, ख्वं कं ।

ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा तुल्यभावेन तत्रापि प्रधानभावं प्राप्य कामभोगकरणमपूर्णज्ञानक्रियावतो भक्तस्यानुपपन्नमित्याशङ्कायां तत्रोपपत्तिमाह।

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ (४. ४. ४.)

न हि तदा नैसर्गिकज्ञानक्रियाभ्यां तथा भोक्तुं शक्तो भवति किन्तु भगवांस्तस्मिन्नाविशति यदा तदायमपि तथैव भवतीति सर्वमुपपद्यते, एतदेवाह प्रदीपवदिति, प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायां वर्त्यामर्वाचीनायामाविष्टः स्वसमानकार्यक्षमां तां करोति, स्नेहाधीनस्थितिश्च भवति स्वयं तथात्रापीत्यर्थः, अत्र प्रमाणमाह तथा हि दर्शयति श्रुतिः (तै.आ.३.१४.) "भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा निविष्ट" इति, "सर्वान् कामा" नित्युक्तत्वाद् यस्य कामस्य भोगो यथा निवेशे सति भवति तत् तथा तदा निवेश इति 'बहुधा निवेश' उक्तः, अयं निवेशो नान्तर्यामित्वेन, तस्यैकधैव प्रवेशात्, निसर्गतः सर्वेषां जीवानां भगवान् भवत्येव प्रभुर्यद्यपि तथापि यं स्वीयत्वेन वृणुते तस्य विवाहितः पतिरिव 'भर्ता सन्' वरणजस्नेहातिशयेन भक्तेनापि 'भ्रियमाणः' सन् स इव स्वयमपि तं स्वस्मिन् 'बिभर्ति', अत एव स्नेहराहित्येनायोगोलकादिकं विहाय प्रदीपं दृष्टान्तमुक्तवान् व्यासः, अत एव 'देव'पदमुक्तं स्वरूपानन्ददानाद् भावोद्दीपनात् पूतनादिमुक्तिदानेन स्वमाहात्म्यद्योतनाद् वैकुण्ठादिस्थितेश्च, तदुक्तं निरुक्ते (७.१५.) "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देव" इति, किञ्च, भक्तानां कामभोजनार्थं क्रीडाकरणात् क्रीडायामेव जयेच्छाकरणाद् भक्तैः सह व्यवहारकरणाद् भक्तेषु स्वमाहात्म्येच्छादिद्योतना(श्रीमद्भाग.१०.२९.३७.)"न पारयेहं"(श्रीमद्भाग.१०.५७.५५.) "न त्वादृशीं प्रणयिनी"मित्यादिभिःस्तुतिकरणाद् भक्तैःप्रपञ्चदर्शनेन कालीयदमनादौ मोदकरणात् तेष्वेव भक्तिमदकरणात् ते स्वप्नेपि प्रियमेव पश्यन्तीति स्वप्नकरणात् तेषां कान्तिकरणादिच्छाकरणाद्वा तन्निकटे गमनादपि 'देवः', तदुक्तं धातुपाठे (पा.धा.दि.१.) "दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगति"ष्विति, एवं सति युक्तमेव तेषां तथात्वमिति हिशब्देनाह ॥ १५ ॥

---

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ एवमधिकरणत्रयेण फलप्राप्तिसामग्रीं फलस्वरूपं च निरूप्य फलानुभवप्रकारं विचारयति तादृशे विषये संशयो भगवद्भोगात्मकोनुभवो भक्तानां सम्भवति न वेत्याकारको भक्तानां स्वतःसामर्थ्याभावः 'सोश्नुते सर्वान् कामा'निति श्रुतिश्च संशयबीजं, एतदभिप्रेत्य सूत्रमवतारयन्ति नन्वित्यादिना, इत्याशङ्कायां नन्वित्यारभ्यैतत्पूर्वपक्षे प्राप्त इत्यर्थः, तदा भगवद्भोगकाले, नैसर्गिकेत्यादि, जीवस्य स्वाभाविकज्ञानक्रियाभ्यामित्यर्थः, शक्तो भवति जीवः शक्तो भवतीत्यर्थः, तथैव भगवत्समानाकार एव, स्वयं वर्त्यन्तरमाविष्टः प्राचीनदीपः, अत्रापि भक्ते भगवानपीत्यर्थः, अत्र प्रविष्टस्य भगवतो भक्तेन सर्वदाधारणे, 'भर्ते'तिश्रुतिस्तु तैत्तिरीये भर्तृसूक्तारम्भेस्ति 'भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा निविष्ट' इति, स इव यथा भक्तो भगवन्तं बिभर्ति तथेत्यर्थः, अत एव निरवधिस्नेहेनैव धारणस्यात्रोक्तत्वादेव, अत एव क्रीडार्थं भगवतो भक्ते निवेशादेव, देवपदं श्रुतौ देवपदं, देवपदस्यार्थमाहुः स्वरूपानन्देत्यादि, तदुक्तं 'देव'शब्दस्य यावदर्थवत्त्वमुक्तं, दिवो दानाद् दिव आधिदैविकस्य दिवः स्वरूपानन्दरूपस्येत्यर्थः, तस्य दानादितिभावः, 'देव'शब्दार्थनिरुक्त्या भगवन्तं निरूप्य 'दिवु'धात्वर्थनिरूपणेन भगवत्स्वरूपं निरूपयन्ति किञ्चेत्यादिना, जयेच्छाकरणाद्, भगवता जयेच्छाकरणादित्यर्थः, व्यवहारकरणात्, तेष्वेव भक्तेष्वेव, ते हारकास्था स्त्रियः, तेषां भक्तानां, तथात्वं दीपन्यायेन भगवदावेशित्वं, हिशब्देन सौत्रहिशब्देन ॥ १५ ॥

---

१. श्रीहस्ताक्षराणि श्रीनाथद्वारादर्शेत्रपर्यन्तमेव। २. सम्भ्रिय° कवपागो। ३. कस्य नो क। ४. °के प्र° के।

नन्व (बृह. ५.८.८.) "स्थूलमनण्वह्रस्व"मित्याद्यनन्तरं पठ्यते (बृह.५.८.९.) "न तदश्नोति कश्चन न तदश्नोति कश्चने"ति, उक्तश्रुतौ च ब्रह्मणा सह जीवस्य भोग उच्यते, तथा च सगुणनिर्गुणभेदेन विषयभेदोऽवश्यं वाच्यो विरोधपरिहारायेत्यत उत्तरं पठति ।

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

इहायमाशयः, (ब्र.सू.३.२.२२.) "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय" इत्याद्यधिकरणैः (श्वेता.६.८.) "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"त्यादिश्रुतिभिश्च प्राकृता एव धर्मा निषिध्यन्ते ब्रह्मण्यप्राकृता एव बोध्यन्ते अन्यथा तद्बोधनमेव न स्यात्, निषेधकवाक्य एव तद्बोधनमपि न स्यात् (बृह.५.८.९.) "एतस्यैवाक्षरस्य प्रशासन" इत्यादिरूपं, अतोऽचिन्त्यानन्तशक्तेर्भगवतः का वा कार्याक्षमता यया प्राकृतान् गुणानङ्गीकुर्यात् ? अतो निर्गुणमेव सदा सर्वत्र भगवद्रूपमिति मन्तव्यं, एवं सति (छा.१०.४२.) "तद् यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती"तिच्छान्दोग्यश्रुतेः प्रस्वापदशायां न कश्चिद् गत्वाश्नाति तच्च न कश्चनेति तद्विषयिणी निषेधिका श्रुति'र्ब्रह्मविदाप्नोति पर'मितिश्रुत्युक्तपरब्रह्मप्राप्तिदशाविषयिणी भोगबोधिका सेति न विरोधगन्धोऽपि, एतदेवाह ।

स्वाप्ययः प्रस्वापः (छान्दो.८.८.१.) "स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षत" इतिश्रुतेः, सम्पत्तिर्ब्रह्मसम्पत्तिरुक्तरीत्या पुष्टिमार्गीयो मोक्षः, एतयोरन्यतरापेक्षमाविष्कृतमाविष्करणं भगवत्प्राकट्यमितियावत्, हि यतोहेतोरतो युक्तमुभयश्रुत्युक्तमित्यर्थः, भगवत्कर्तृकभोगस्य लीलारूपत्वात् तस्याश्च (ब्र.सू.२.१.३३.) "लोकवत् तु लीला कैवल्य" मित्यत्र मुक्तित्वेन निरूपणात् तत्प्राप्तेः सम्पद्रूपत्वं युक्ततरमिति हिशब्दार्थः ॥ १६ ॥ ४ ॥

॥ इति चतुर्थाध्यायस्य चतुर्थपादे चतुर्थं प्रदीपवदित्यधिकरणम् ॥ ४ ॥

ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतमुत नेतिसंशये तद्युतमिति पूर्वः पक्षः, तथा सति मुक्तित्वभङ्गात् पूर्वोक्तमनुपपन्नमिति प्राप्त आह जगदित्यादि ।

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ (४.४.५.)

पूर्वोक्तस्य जगत्सम्बन्धी लौकिको यो व्यापारः कायवाङ्मनसां तद्वर्जं तद्रहितं भोगकरणं तत्र हेतू आह प्रकरणादसन्निहितत्वाच्चेति, (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मित्युप-

---

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ सूत्रमवतारयन्ति नन्वस्थूलमित्यादिना, अग्रे पठ्यमानमाहु 'र्न तदश्नोती'त्यादि, अभेदेन ब्रह्मकर्तृकब्रह्मकर्मकभोगो निषिध्यते, उक्तश्रुतौ 'सत्यं ज्ञान'मितिश्रुतौ, विषयभेदः सगुणो भोग्यो निर्गुणोऽभोग्य एवंरीत्या विषयभेद इत्यर्थः, इह सूत्रे, अयं वक्ष्यमाणः, अन्यथा ब्रह्मणो निर्धर्मकत्वे, तद्बोधनं धर्मबोधनं स्वाभाविकीत्यादिना, इत्यादिरूपं प्रशासनद्युपृथिव्यादिधारणरूपं, प्रस्वापदशायां जीवस्य प्रस्वापदशायां, न कश्चिज्जीवः तत्र प्रदात्र, तद्विषयिणी प्रसुप्तविषयिणी, उक्तार्थं सूत्रं योजयन्ति स्वाप्यय इत्यादिना, उभयश्रुत्युक्तं भोगतदभावरूपं, हिशब्दार्थः सोऽग्रिहिशब्दार्थ इत्यर्थः ॥ १६ ॥ ४ ॥

॥ इति चतुर्थचतुर्थे चतुर्थाधिकरणम् ॥ ४ ॥

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥१७॥ भोगप्रकारविशेषं निरूपयितुमधिकरणमवतारयन्ति ब्रह्मणा सहे- [illegible]

वार्थं, सूत्रेण [illegible]

---

१. हि [illegible]

युक्तमितिपर्यन्ता त्रुटिः प्रकाशकारैः सन्धापिता । ४. °का° व ।

क्रमेण मुक्तिप्रकरणात् तत्र लौकिकव्यापारोसम्भावितः, किञ्च लीलाया-
त्वेन प्राकृतं जगद् दूरतरमितोपि हेतोर्न तत्सम्भवः, कदाचिल्लोके लीला
तदधिष्ठानत्वयोग्ये मथुरादिदेशेतिशुद्धे गोलके चक्षुरिन्द्रियमिव स्थापयित्वा लीलां
तदापि लीलामध्यपातिनां न लौकिकव्यापारसम्भवः, न हि चक्षुरिन्द्रियं गोलककार्यं
न वा तन्नाशे नश्यति, एतत् सर्वं "दिवीव चक्षुराततं"मितिश्रुतिव्याख्याने विद्वन्मण्डने ...
किञ्च छान्दोग्ये ( ७. २३. १. ) "भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य" इत्युक्त्वा
लक्षणमाह (७.२४.१.)"यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमे"ति,
"नान्यद् विजानाती"त्येतावतैव चारितार्थ्येपि यदिन्द्रियव्यापारो ......
भगवद्विषयकः स सिद्धो भवतीति जगद्व्यापाररहित्यं सिद्धं तत्र, तेन भगवत एव
स्वतन्त्रफलत्वमुक्तं भवति, न हि सुखस्यान्यत् प्रयोजनमस्ति ॥ १७ ॥

नन्वेतत्प्रकरण एव छान्दोग्ये पठ्यते ( ७. २६. २. ) "सर्वं ह पश्यती"ति सर्व-
विषयकप्रत्यक्षमुपदिश्यत इत्यन्यविषयकव्यापाररहित्यं नोपपद्यत इत्याशङ्क्य समाधत्ते
आधिकारिकेत्यादिना ।

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्योक्तेः ॥ १८ ॥

अत्रेदमुच्यते "सोश्नुते" "लोकवत् तु लीला कैवल्य"मित्यादिभिर्नित्यलीलामध्यपातित्वं
तस्योच्यते "नान्यत् पश्यती"त्यादिश्रुतिवशाज् जगद्व्यापारवर्जं भोगकरणं पूर्वसूत्रेणोक्तं, अत्रेदं वि-
चार्यते 'नान्यत् पश्यती'तिप्रकरण एव "सर्वं ह पश्यती"ति सर्वविषयकं दर्शनमुच्यते तत् कथं पूर्वो-
क्तमुपपद्यत इति,किञ्च, एकस्यैव भक्तस्य देशकालभेदेन क्रियमाणानेकलीलासम्बन्धित्वं भवति, तच्च
लीलानित्यतायां न घटते, यतस्तत्तद्देशस्तत्तत्कालसम्बन्धिनी सा नित्या, एवं सत्येकस्यानेकरूपत्वं
जीवस्य न सम्भवतीति तन्नित्यत्वमपि न सिध्यतीति तत्रोच्यते, श्रुतौ 'सर्व'पदेन न जगदुच्यते

दित्यस्यार्थं वक्तुमाहुः किञ्चेत्यादि, न तत्सम्भवो न लौकिकव्यापारसम्भवः, कदाचित् तादृशभक्तोद्धारेच्छाकाले, तद् व्यापिवैकुण्ठमक्षरं ब्रह्म, 'त'दिति 'स्थापयित्वे'त्यनेनान्वेति, अधिष्ठानत्वयोग्ये स्थापयित्वा व्यापिवैकुण्ठे स्थापयित्वेत्यर्थः, तदापि मथुरादिदेशावच्छिन्नव्यापिवैकुण्ठे भगवता सह भक्तानां लीलाकरणकालेपि, लौकिक-व्यापाराभावमेवोपपादयन्ति न हीत्यादिना, चक्षुःस्थानापन्नमक्षरं गोलकस्थानापन्नो भूदेशः, तन्नाशे गोलक-भूभागयोर्नाशे, नश्यति चक्षुरक्षरं वा नश्यतीत्यर्थः, लीलायां लौकिकव्यापाराभावे प्रमाणान्तरमुपन्यस्यन्ति किञ्चे-त्यादिना, स चक्षुःश्रोत्रव्यापारः, तत्र भगवता सह भक्तलीलायां, तेनेतरविषयतानिषेधेन, फलितमाहुर्न हीत्यादि, इतरसाधनलाभस्य प्रयोजनं सुखरूपं फलं यथा तथा सुखरूपभूमलाभस्यापि किञ्चित् प्रयोजनं स्वातिरिक्तं फलमस्तीति न हीत्यर्थः, तादृशफलस्याप्रसिद्धेरित्यर्थः ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्योक्तेः ॥ १८ ॥ सूत्रमवतारयन्ति नन्वित्यादिना, एतत्प्र-करण एव भूमविद्याप्रकरण एव, पठ्यते 'सर्वं ह पश्यः पश्यती'त्यादि पठ्यते, तथा च भक्तस्याक्षरे ब्रह्मसर्वदर्शन-रूपो व्यापारो 'जगद्व्यापारः' श्रूयत इत्यर्थः, अत्रैतत्सूत्रान्तरेण, इदं वक्ष्यमाणमधिकं सङ्ग्राह्यं, तस्य भक्तस्य, अत्र शङ्कास्पदे विरोधे, इदमनुपदं निरूप्यमाणं, पूर्वोक्तं जगद्व्यापाररहित्यं, प्रथमाशङ्कां दृढीकृत्य 'सोश्नुते' 'लोकवत्' त्वित्याद्युक्ते विरोधमुपपादयन्ति किञ्चेत्यादिना,एकस्यैव 'एवं पश्यन्' 'सर्वं हि पश्यः पश्यती'त्यादिश्रुतिषु सर्वत्रैक-वचनोपादानादेकस्यैवेत्यर्थः, न घटते पूर्वसिद्धतत्तद्देशकालावच्छिन्नलीलासम्बन्धस्य भक्ते नित्यत्वेनावच्छेदासम्भवात् देशान्तरकालान्तरावच्छिन्नलीलासम्बन्धो भक्ते न घटत इत्यर्थः, एवं सति एकस्यैव भक्तस्यैकस्मिन्नेव काले नानादेशावच्छिन्नलीलाया एकस्मिंश्च देशे नानाकालावच्छिन्नलीलायाश्चाङ्गीकारे सतीत्यर्थः, न सम्भवति श्रुत्यान्य-नुक्तत्वान्न सम्भवतीत्यर्थः, एकस्यानेकत्वे तु सर्वमेव सुघटं स्यादित्यर्थः, तत्रोच्यते पूर्वसूत्रोक्तजगद्व्यापारवर्जनस्य

१. °त्रं खपाठो । २. °पश्यत्या° कखपाठो ।

किन्तु यस्यां यस्यां लीलायां देशकालभेदेन क्रियमाणायामधिकृतो य एको भक्तस्तस्यैव तावन्ति रूपाणि सन्ति तान्याधिकारिकाणीत्युच्यन्ते, तेषां मण्डलं समूहस्तत्र स्थितवस्तुमात्रमुच्यत इति नानुपपन्नं किञ्चित्, अत एवाग्रे पठ्यते (९.२६.२.) "सर्वमाप्नोति सर्वश" इति, (९.२६.२.) "स एकधा भवति त्रिधा भवति पञ्चधा भवति सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतञ्च दश चैकश्च सहस्राणि च विंशति"रिति, यथा मण्डलवर्तिषु पुंसु नैकस्य प्राथम्येन प्राधान्यं वक्तुं शक्यं तथैतेष्वपि रूपेष्वितिज्ञापनाय मण्डलपदमुक्तम् ॥ १८ ॥

नन्वेवं सति 'ध्वस्त्वद्रेहमायास्य'इति प्रभुणोक्ते तदाशया तत्स्थितिर्नोपपद्यते नित्यत्वात् लीलायास्तस्य कालस्य तदागमनस्य च तदापि वर्तमानत्वात् तथा प्रभुक्तिरपि नोपपद्यत इत्याशङ्क्य समाधत्ते ।

## विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

इह भगवल्लीला प्रकृतिस्तद्विरुद्धोऽर्थो विकार इत्युच्यते तत्र न वर्तते तज्ज्ञानं तादृशं च भवति, यत् स्वरूपं प्रति तथा वदति तस्य स्वगेहे तदा भगवत्स्थितिज्ञानं न भवतीत्यर्थः, उपलक्षणं चैतदतो यद्देशकालविशिष्टा यादृशी या लीला तस्यास्तादृश्या एव तल्लीलामध्यपातिनो भक्तस्य ज्ञानं नान्यविषयकमिति ज्ञेयं, अत एव द्वितीयस्यापि मद्यं पूर्वमुक्तमासीत् तेनागत इत्येव ज्ञानं भवति तदैव हि रसोद्योतो रसस्वरूपमध्यपातित्वाल्लीलाया रसस्य च भगवदात्मकत्वाद्भगवद्रूपत्वेन सर्वमुपपद्यते लीलायां, अत्र प्रमाणमाह तथा हि स्थितिमाहेति (छान्दो. ९.२६.२.) "सर्वमाप्नोति सर्वश" इतिश्रुतिरेकस्यैव भक्तस्य सर्वशः सर्वैः प्रकारैः सर्वलीलारसमाप्नोतीति यदन्त्युक्तरीत्यैव लीलायां स्थितिमाहेत्यर्थः, अतो वस्त्वेवेदमलौकिकमीदृशमिति मन्तव्यं वैदिकैरितिभावः, अलौकिकेऽर्थे लौकिकरीत्यनुसरणं न युक्तं किन्त्वलौकिकरीत्यनुसरणमेव युक्तमिति हिशब्देन द्योत्यते, एतेन (तै. ब्र.) "रसो वै स" इतिश्रुतेर्लीलाविशिष्ट एव प्रभुस्तथेति तादृश एव परमफलमिति ज्ञापितं भवति ॥ १९ ॥

---

'स सर्वं पश्यती'त्यनेन खण्डने कृते समाधानमुच्यत इत्यर्थः, तावन्ति नानादेशकालावच्छिन्नलीलानुभवयोग्यानि, तान्येकभक्तीयनानारूपाणि, तेषां एकभक्तीयनानारूपाणां, उच्यते 'स सर्वं पश्यती'ति 'सर्व'शब्देन योग्यतावल्लीलावस्तुमात्रमुच्यते न तु जगत्, तादृशस्य दर्शनायोग्यत्वात्, 'नान्यत् पश्यती'त्यनेनैवायोग्यतोपपादनात्, अत एवैकस्यैवानेकरूपैः सर्वलीलासम्बन्धिसकलपदार्थदर्शनाङ्गीकारादेव, तथैतेष्विति, आधिकारिकमण्डलस्थो यो भक्तजीवस्तदीययावद्देहेष्वपि प्राधान्यव्यवस्था समैवेत्यर्थः. ॥ १८ ॥

विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥ सूत्रमवतारयन्ति नन्वित्यादि, एवं सति लीलाघटकसकलपदार्थानां नित्यत्वे सति, तदाशया भक्तनभगवदागमनाशया, तत्स्थितिर्भगवद्विरहेण स्थितिः, तस्य कालस्यागमनकालस्य, तदाप्यागमनसङ्केतितपूर्वदिनेपि, नोपपद्यत आगमने भविष्यत्वबोधिका नोपपद्यत इत्यर्थः, इह व्याससिद्धान्ते, तद्विरुद्धो वास्तवभगवल्लीलापदार्थविरुद्ध, तत्र लीलाबहिर्भूतविकारपदवाच्यलौकिकपदार्थे सति, तज्ज्ञानं 'विकारावर्ती'त्यनेनोच्यत इत्यर्थः, चकारार्थमाहुस्तादृशमिति, तादृशमयमत्राय नास्तीति विकारविषयलौकिकज्ञानसमानसमाकारं च भवति मद्गेहेद्यदिने भगवान्नास्तीतिज्ञानं भगवत्तिरोधानसम्पादितमित्यर्थः, यत् स्वरूपं प्रति भक्तीयनानास्वरूपाणां मध्ये यत् स्वरूपं प्रतीत्यर्थः, न भवति स्वजनकधूमाद्यसमवधाने कुङ्कुमगन्धादेरिवाविर्भावाद्यसन्निधाने भगवतोपि प्रत्यक्षं न भवतीत्यर्थः, एतद् भगवद्दर्शननिरूपणं, तादृश्याः संयोगविप्रयोगान्यतररसात्मकभगवद्रूपायाः, नान्यविषयकमिति ज्ञेयं, 'नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाती'त्यादिश्रुतिभिर्न भगवदतिरिक्तविषयकं ज्ञेयमित्यर्थः, अत एव लीलामध्यपातिभगवदतिरिक्तज्ञानासम्भवादेव, अत्र सर्वदा भक्तानां भगवल्लीलारसपाने, सर्वशो लीलोपयोगिसर्वदेशकालावच्छेदेन, सर्वैः प्रकारैः रसनिष्पादकसर्वैः प्रकारैरित्यर्थः, उक्तरीत्येत्यादि, एकस्यैव भक्तस्य सकललीलारसभोगोपयोगिनानास्वरूपैर्लीलायां स्थितिमाहेत्यर्थः, अतः सर्वलोकविलक्षणतया भोगोपपादनव, इदमेतादृशलीलारूपं, तथा रसरूपः ॥ १९ ॥

---

१. °व्युपदेश° क्वचित् ।

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

न च लौकिकयुक्तिविरोधोत्र बाधकत्वेन मन्तव्यः किन्तु साधकत्वेन, यतः प्रत्यक्षानुमाने श्रुतिस्मृती अपि लौकिकयुक्त्यप्रसारेणालौकिके भगवत्सम्बन्धिन्यर्थेन्यथाभावं निषेधति, (कठ. १.२.९.) "नैषा तर्केण मतिरापनेया" (श्वेता. ६.८.) "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"। (म. भा. भी. ५.१२.) "अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्", श्रीभागवते च (६.९.३६.) "न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेनवगाह्यमाहात्म्येर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाशयदुरवग्रहवादिनां विवादानवसर" इत्यादिवाक्यैरचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव परमफलत्वं प्रदर्श्यते, किञ्च (ऋक्सं. २.२.२४.) "ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि" त्यृग्वेदे पठ्यते किञ्चित्पाठभेदेन यजुःशाखायामपि, "ता" तानि "वास्तूनि" "वां" गोपीमाधवयोः सम्बन्धीनि "गमध्यै" प्रसादत्वेन प्राप्तु "मुश्मसि" कामयामहे, तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति "यत्र" श्रीगोकुले "गावो भूरिशृङ्गा" बहुशृङ्गा रुरुप्रभृतयः, वसन्तीतिशेषः, ग्राम्यारण्यपशूपलक्षणार्थमुभयोरेव ग्रहणं, "अत्राह" भूमावेव "तदुरुगायस्य" बहुगीयमानस्य "वृष्णः" भक्तेषु कामान् वर्षतीति वृषा तस्य "पदं" स्थानं वैकुण्ठं ततोपि "परम"मधिकमत्र विचित्रलीलाकरणाद् "भूरि" यमुनापुलिननिकुञ्जगोवर्धनादिरूपत्वेन बहुरूपं, तथा च तत्रत्यानि तानि "कामयामह" इतिवाक्यार्थः सम्पद्यते, एतेन लीलासम्बन्धिवस्तूनां यत्र फलत्वेन बहुरूपप्रार्थनं तत्तल्लीलाकर्तुः परमफलत्वे किं वाच्यमित्याशयो ज्ञाप्यते, (श्रीमद्भग. ६.९.३९.) "अथ ह वाव तव महिमामृतसमुद्रविप्रुषासकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवता" इति श्रीभागवते, एतेनापि कैमुतिकन्यायेन प्रभोरेव स्वतःपुरुषार्थत्वं ज्ञाप्यते, फलप्रकरणत्वात् तदेवाचार्यतात्पर्यविषय इति ज्ञायते।

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतोपि हेतोः पुरुषोत्तमस्वरूपमेव परमं फलमिति ज्ञायते, यतः (तै. व्र.) 'सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"तिश्रुतौ भक्तसाम्यमुच्यते तच्च पुरुषोत्तम एव सम्भवति, यतः सख्यं दत्वा तत्कृतात्मनिवेदनमङ्गीकुर्वन्नतिकरुणः स्वस्वरूपानन्दमनुभावयंस्तं प्रधानीकरोति,

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ नानास्वरूपैकैकभक्तपदशानेकभक्तघटितलीलाविशिष्टभगवत्स्वरूपस्य रसरूपस्य लौकिकयुक्त्यसिद्धत्वं दूषणं मनसिकृत्य तन्निरासाय सूत्रमवतारयन्ति न चेत्यादिना, अत्र तादृशभक्तविशिष्टलीलाया नित्यत्वे, किन्त्वित्यादि, येन लौकिकयुक्त्यगोचरत्वमलौकिके साधकं तेन विरोधोपि तथा नानुमानबाधक इत्यर्थः, प्रत्यक्षेत्यादि, उक्तार्थस्य नित्यानुमेयश्रुतिमूलकत्वाभावात् स्वतःसिद्धप्रामाण्यमूलकानुमितिप्रामाण्यकत्वेनानुमानपदेनोपादानं, अन्यथाभावनं लौकिकयुक्तिसिद्धतया भावनं, एषोपनिषज्जनिता रसात्मकस्वरूपविषयिणी, प्रमाणान्तरमाहुः किञ्चेत्यादिना, किञ्चित्पाठभेदेन 'विष्णु'पदप्रयुक्तपाठभेदेनेत्यर्थः, उक्तश्रुत्यर्थमाहुस्तानीत्यादि, एतेन लीलासम्बन्धिपदार्थानां कामनायाः श्रुत्या निरूपणेन, लीलासम्बन्धिपदार्थकामनाश्रुतया तादृशपदार्थैलीलास्य फलत्वमाहुरथ हेत्यादिना ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ सूत्रमवतारयन्तीतोपीत्यादिना, इतोपि भोगांशे साम्यतोपि, पुरुषोत्तम एवेत्येवकारेणाक्षरभोगार्थसाम्यव्यवच्छेदः, प्रधानीकरोति 'सह'शब्दात् स्वयं गौणो भूत्वा भक्तं प्रधानीकरोतीत्यर्थः

१. °कभ° कंपु। २. °क्त° कंपु। ३. त° कं। ४. इमं कंपु। ५. °त्त° क। ६. इमं पु।

यथा भक्तोनुभवितुं न शक्नुयात्, युक्तं चैतत्, प्राप्तं फलं स्वाधीनं भवत्येवान्यथा फलत्वं न स्यात्, तथाचास्माल्लिङ्गादपि भगोरेव परमफलत्वं सिध्यति, (श्वेता. ६.८.) "न तत्समश्चाभ्यधिकश्च दृश्यत" इतिश्रुतिविरोधपरिहाराय मात्रपदं, न चात्र कामभोगस्य फलत्वं नीयं, "आप्नोति पर"मित्येतद्व्याकृतिरूपत्वात् स्वरूपानुभवरूपत्वाद् भोगस्य, अनुभूयमानस्यैव हि सुखस्य लोके पुरुषार्थत्वोक्तेः ॥ २१ ॥

एवं भगवतः स्वतःपुरुषार्थरूपत्वमुक्त्वा कर्मफलभोगानन्तरमावृत्तिवदत्राप्यावृत्तिर्भविष्यतीत्याशङ्कानिरासायोत्तरं पठति।

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

अनावृत्तिर्भक्तानां ज्ञानिनां चोच्यते, तत्र मानं शब्दः, स च (छान्दो १०.६.६.) "तयोर्ध्वमायन्नमृतत्वमेति" ( छान्दो. ६.१५.६.) "न तेषां पुनरावृत्तिरेतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" ( छान्दो. १०.१५.१.) "ब्रह्मलोकमभिसम्पद्यते" "न च पुनरावर्तते" इत्यादिरूपस्तु ज्ञानिनां तामाह, न हि भक्तानां नाड्यादिप्रयुक्तममृतत्वं (श्रीमद्भाग.११.२०.३१.) "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे"त्यादिवाक्येभ्यः, किन्तु ( कठ. २.२२. ) "यमेवे"तिश्रुतेर्वरणमात्रलभ्यः पुरुषोत्तमः, एवं सति (तै. ब्र.) "ब्रह्मविदाप्नोति पर"मितिश्रुतेर्विरोधपरिहारपूर्वकोक्तव्याख्यानरीत्या भक्तस्य परं ब्रह्म प्राप्तस्य निर्दोषत्वादावृत्तिहेत्वभावात् प्रपञ्चे नावृत्तिः सम्भवति, तादृशं प्रतीश्वरेच्छापि न तथा भवितुमर्हति, (श्रीमद्भाग. ९.४.६५.) "ये दारागारपुत्राप्तप्राणान् वित्तमिमं परं हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे" इति भगवद्वाक्यात्, परप्राप्तिरूपत्वाच्च भोगस्य न नाशसम्भावना, किञ्च यत्रैकस्यैव भक्तस्य देशकालभेदेनानेकविधलीलासम्बन्धित्वेपि तत्तल्लीलासम्बन्धित्वमनश्वरत्वमुच्यते तत्र सर्वथा तदभावः कथं वक्तुं शक्यो ब्रह्मणापि? अपरञ्च कालसाध्यो हि नश्वरः स्यात्, न हि पुरुषोत्तमे कालः प्रभवितुं शक्नोति, (श्रीमद्भाग. २.२.१७.) "न यत्र कालो निमिषां परः प्रभु"रित्यादिवाक्येभ्यः, तथा च ज्ञानमार्गीयभक्तिमार्गीययोरनावृत्तौ तुल्यत्वेपि फलप्राप्तौ वैलक्षण्यात् पूर्ववाक्येन भक्तानामाहानावृत्तिमुत्तरवाक्येन ज्ञानिनामिति

अन्यथा भक्ते भगवता प्राधान्यादाने, प्राप्तं भक्तेन प्राप्तं, फलं सर्वकामाशनरूपं, अन्यथा स्वाधीनतया भोगस्याभावे, अस्मात् साम्यरूपात्, मात्रपदमिति, तथा च भोगमात्र एव साम्यं न तु सृष्टिकरणादाविति सूत्रे मात्रपदोपादानात् श्रुतिविरोधपरिहारः, नन्वत्र कामफलभोगस्यैव श्रुत्युक्तत्वाद् भोगस्यैव फलत्वं न तु परब्रह्मण इत्यत आहुर्न चेत्यादि, व्याकृतिरूपत्वात् 'सोश्नुते सर्वान् कामा'नित्यस्य तद्व्याकृतिरूपत्वादित्यर्थः ॥ २१ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥२२॥ सूत्रमवतारयन्त्येवं भगवत इत्यादिना, अत्रापि ज्ञानभक्तिमार्गयोरपि, सूत्रं व्याकुर्वन्त्यनावृत्तिरित्यादिना, तथा देवयानवीथ्या, तेषामभृतत्वमापन्नानां, इत्यादिरूपः शब्द इत्यर्थः, तामनावृत्तिं, नाड्यादिप्रयुक्तमित्यादि, तथा च 'शतञ्चैका च हृदयस्य नाड्य' इत्यनेन नाडीद्वारेणोत्क्रान्तो मृतत्वमाप्नोतीतिप्रकारो भक्तेषु नास्तीत्यर्थः, न हीत्याद्युक्ते हेतुमाहुस्तस्मादित्यादि, भक्तानामनावृत्तौ हेतुमूलः कः शब्द इत्याकाङ्क्षायां तमाहुः किन्त्वित्यादिना, विरोधपरिहारेति, तथा च ब्रह्मविद् ब्रह्मैव प्राप्नुयात् कथं परं प्राप्नुयादिति विरोधे समाहितं ब्रह्मविद् ब्रह्मैव प्राप्नुयात् परब्रह्मवित् परं प्राप्नोतीत्यर्थः, आवृत्तिहेत्वभावादविद्याकामकर्मादिरूपावृत्तिहेतूनामभावादित्यर्थः, तादृशं भक्तं, इच्छावृत्तिरस्य सर्वविलयकारिणेश्वरेच्छा, अनुगृहीतभक्ते भगवतः पुनरावृत्त्यभावे हेतुमाहुर्ये दारेत्यादिना, अपरब्रह्मप्राप्तानां ज्ञानिनामनावृत्तौ श्रुतौ सिद्धायां परब्रह्मप्राप्तानां भक्तानामनावृत्तिः कैमुतिकन्यायसिद्धेत्याहुः परप्राप्तिरित्यादिना, अनेकविधेत्यादि, आधिकारिकानेकदेहैरनेकलीलासम्बन्धित्वेपीत्यर्थः, तत्र तादृशभक्ते, सर्वथा तदभावः पुनरावृत्तिलक्षणः, कालसाध्यः कालाधीनस्थित्युत्पत्तिकः पदार्थः, पुरुषोत्तमे पुरुषोत्तमात्मकलीलासम्बन्धे, वैलक्षण्यात् परापरब्रह्मप्राप्तिरूपवैलक्षण्यात्,

१. 'कैः के। २. अनश्वरमिति सर्वेष्वादर्शोः।

ज्ञायते, न च फलप्रकरणात् तेनावृत्त्युक्तेः संसाराभाव एव जीवस्य परमं फलमित्याचार्या ज्ञायत इति वाच्यं, ब्रह्मविदः परप्राप्तिं फलत्वेनोक्त्वा तत्स्वरूपस्य सर्वकामभोगत्वेन, निरूपणात्, स च स्वस्वाधिकारानुसारेण निवेदितार्थाङ्गीकाररूप एवेति ज्ञेयं, तेन स एव फलमनावृत्तिस्त्वर्थिकी परं त्वावृत्तौ सम्भवन्त्यां परमफलत्वं नोपपद्यत इतिज्ञानदुर्बल निरासायेयमुक्ता, पुष्टिमार्गीयभक्तविशेषप्रवर्तकनिवर्तकवेणुशब्दाद् भगवन्निकटगतावना पूर्वेणोक्ता मर्यादामार्गीयाणां वेदरूपाच्छब्दात्तदुक्तसाधनादनावृत्तिं द्वितीयेनेत्यपि त विषयः श्लिष्टोर्थो ज्ञेयः, तथा सति परमफलमग्रे स्वत एव भावीति भाव इत्यलं विस्तरेण ॥

जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् । तदन्यदिति ये प्राहुरासुरांस्तानहो बुधाः ॥१॥

नानामतध्वान्तविनाशनक्षमंवेदान्तहृत्पद्मविकासने पटुः ।

आविष्कृतोयं भुवि भाष्यभास्करो मुधा बुधा धावत नान्यवर्त्मसु ॥ २ ॥

पुरन्दरमदोद्भवप्रचुरवृष्टिसम्पीडितस्वकीयवरगोकुलावनपरायणो लीलया ।

सितामृतसुवृष्टिभिः परिपुपोष तान् यो गिरिं दधार च स एव हि श्रुतिशिरःसु संराजते ॥ ३

श्रीकृष्णकृपयैवायं सिद्धान्तो हृदि भासते । तेनाधिकं वरीवर्ति न वक्तव्यं हरे र्नृणाम् ॥ ४

भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे । निवेदितस्तेन तुष्टा भवन्तु मयि ते सदा ॥५॥२२

॥ इति चतुर्थाध्याये चतुर्थपादे पञ्चमं जगद्व्यापाराधिकरणम् ॥ ५ ॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीब्रह्मसूत्राणुभाष्ये

चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः ॥

॥ समाप्तश्चतुर्थोध्यायः ॥ समाप्तं श्रीब्रह्मसूत्राणुभाष्यम् ॥

---

पूर्ववाक्येनेत्यादि, सूत्रपूर्वार्धेनेत्यर्थः, तथा च श्रुत्यात्मकशब्देन भक्तानां परप्राप्तेरुक्तत्वात् सूत्रकाराणामपि भ वृत्तिरेवादावभिप्रेतेत्यर्थः, यद्यपि सूत्र आवृत्तिः समाप्तितात्पर्यिका तथापि श्लेषेण सोप्यर्थोवसेयः, परेषां मतम पूर्वपक्षमाहुर्न चेत्यादि, पूर्वपक्षस्य श्रुत्यर्थविरुद्धत्वाच्छ्रुत्यर्थेन समाधानमाहुर्ब्रह्मविद इत्यादिना, स च सर्व फलभोगश्च, स एव सर्वकामफलभोग एव, प्रवर्तको भगवति सर्वकामफलभोगार्थं प्रवर्तकः, निवर्तक प्रपञ्चलौकिकेभ्यो निवर्तकः, पूर्वेण सूत्रपूर्वार्धेन, द्वितीयेन सूत्रोत्तरार्धेन, तथा सति भगवन्निकटे सति, प स्वरूपमाहुर्जानीतेत्यादिना, सूर्यरूपेण भाष्यं निरूपयन्ति नानामतेत्यादिना, वेदान्तेत्यादि, अविद्यातमो विनाशनेन वेदान्तार्थैः किरणसदृशैर्हृत्पद्मविकासनसमर्थ इत्यर्थः, ग्रन्थस्वरूपं प्रतिपाद्य ग्रन्थप्रतिपाद्यार्थस्य यासेन सकलानिष्टनिवृत्तिपूर्वकसकलेष्टसाधकत्वसकलोपनिषत्प्रतिपाद्यत्वञ्चाहुः पुरन्दरेत्यादिना, स्वकीयव स्वकीयानां वररूप इत्यर्थः, भगवन्मार्गीयसिद्धान्तरहस्यानां बहुशो विद्यमानत्वेपि भगवत्कृपाव्यतिरेकेण हृदयारोहासम्भवात् कृपासत्त्वे च स्वत एवारोहसम्भवात् तथानिर्वचनं नातिप्रयोजकमित्याहुः श्रीकृष्णेत्या शिष्यान् शिक्षयन्तो ग्रन्थान्ते मङ्गलमाचरन्ति भाष्येत्यादिना, तथा च तृतीयाध्यायद्वितीयचरणनवमाधिक स्थानविशेषात् प्रकाशादिवदितिसूत्रमारभ्य चतुर्थाध्यायसमाप्तिपर्यन्तं श्रीमद्गोस्वामिनां कृतिरिति श्रीमदा चरणार्पणं तस्याः स्वयं कृतत्वमिति बोध्यम् ॥ २२ ॥ ५ ॥

श्रीवल्लभकृपालेशाच्छ्रीविट्ठलसुधीक्षणात् । पदानामणुभाष्यस्य प्रदीपः पूर्णतामयात् ॥ १ ॥

श्रीगोपालगुरोः प्रीत्या त्विच्छारामप्रदीपतः । प्रकाशयतु सर्वस्वं श्रीवल्लभरहःकृतम् ॥ २ ॥

॥ समाप्तं चतुर्थचतुर्थे पञ्चमाधिकरणम् ॥ ५ ॥

इति श्रीमद्गोस्वामिश्रीवल्लभजीसुतगोपालजीविरचितेणुभाष्यपदप्रदीपे

चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

॥ समाप्तश्चतुर्थाध्यायः ॥ समाप्तः श्रीमद्ब्रह्मसूत्राणुभाष्यपदप्रदीपः ॥

---

१. इमं क । २. °मो मभापुणे । ३. °सिद्धान्त° कपु । ४. °र्नृणाम् कपु । ५. चरणेतिपदस्य श्रीमद्ब्रह्मभाषीधरेक्यपरत्वादेषा तार्थाध्यायभाष्यकृतिः ... श्रीमद्ब्रह्माचार्याणां श्रीमदाचार्यचरणैः स्वस्य कृतेः स्वपदाम्बुजे निवेदनस्यानुपपन्नत्वात् सूत्रकाराणां श्रीमद्व्यास ...

